दातव्यं प्रथमं तस्मै श्रावकैः सर्वभक्तितः[1] ।
दत्वा पुष्पं फलं तोयं पत्रमिन्धनमेव च ॥
सारभूतं[2] च यच्चान्यत्तस्मै देयं समन्ततः ।
अथ सर्वैस्तथा कार्यं श्रावकैः पूजनं नृप ॥
वाचकस्तु यथा नित्यं सुखमास्ते नराधिप ।
न पीड्यते यथा द्वन्द्वैस्तथा कार्यं वरानन ॥
हैमन्ते लोमशं देयं छत्रं प्रावृषि सत्तम ।
उपानहौ कालयोगे काले[3] वै कुशलोमशौ ॥
यदा दातुं न शक्नोति माषकं काञ्चनस्य तु ।
ततस्तस्य तदा दद्याद्राजतं श्रेयसेऽनघ ॥
तदभावे हिरण्य तु वित्तशाठ्यं विवर्जयेत् ।
मृत्तिकापि हि दातव्या कुर्वता सफलं श्रुतम् ॥
इत्येषा कथिता नित्या मासि मासि भवेत्तदा ।
नैमित्तिकी भवेद्राजन् ग्रहणादिषु पर्वसु ॥
अमले वाससी राजन् गन्धमाल्यविभूषणम् ।
समाप्ते पर्वणि विभो दातव्यं भूतिमिच्छता ॥
ज्ञात्वा पर्वसमाप्तिं तु पूजयेद्वाचक बुधः ।
आत्मानमपि विक्रीय य इच्छेत्सफलं श्रुतम् ॥
नैमित्तिकीं च नित्यां च दक्षिणां न ददाति यः ।
शृणोति च सदा तात तस्य तन्निष्फलं श्रुतम् ॥
चतुर्गुणा भवेद्राजन् या नित्य दक्षिणा विभो ।

1 श्रावकैस्तत्र भक्तित —ज, श्रावकैरतिभक्तित —हे ब्र
2 सारस्वत च—हे ब्र
3 कालौ—हे ब्र

**समाप्ते पर्वणि विभो[1] इत्याह भगवान् शिवः ॥**
**इत्येष कथितो राजन् पुराणश्रवणे विधिः ।**

[2]इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण [3]भट्टहृदय-धरात्मजेन श्रीलक्ष्मीधरेण विरचिते कृत्यकल्पतरौ नियतकालकाण्ड समाप्तम् ॥

॥ श्रीशुभमस्तु[4] ॥

1 ऐच्छिक भोगमाप्नोति—हे ब्र

2 इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्टश्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ नियतकालकृत्यकाण्ड समाप्तम् ॥ ९ ॥ शुभमस्तु सर्वजगताम् ॥

मङ्गल लेखकाना तु पाठकाना तु मङ्गलम् ।
मङ्गल सर्वभूताना भूमौ भूपतिमङ्गलम् ॥
श्रद्धया साध्यते धर्मो महद्भिर्नार्थराशिभि ।
अकिचना हि मुनय श्रद्धावन्तो दिव गता ॥

॥ ओ तत् सत् ॥

मङ्गल भगवान् विष्णुर्मङ्गल गरुडध्वज ।
मङ्गल पुण्डरीकाक्षो मङ्गलायतनो हरि ॥

शुभ भूयात् ॥ श्रीरघुनाथाभ्या नम ॥—ज

3 भट्टश्रीहृदयधरात्मजभट्टश्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ नियतकालकाण्ड समाप्तमिति—॥ शुभम् । श्रीपरमात्मने नम ॥ श्रीरामचन्द्राय नम । सवत् । १७३६ ॥ शिवाय नम ॥ रामाय नम । भास्कराय नम । द्विज्येष्ठया पौर्णमास्या च तथा वारे बृहस्पतौ । काण्ड नियतकाल च व्यलिखद्गोविन्द सुधी ॥ रामाय नम । शिवाय नम । चन्द्राय नम ॥—ना

4 There is a footnote at the end of the ज MS

काण्डस्यास्यान्तर्गतानि पद्यानि गद्यविषयश्च मूलप्रत्या सशोध्य कुत्रचित्स्थलेषु पादपूर्तिरपि यावच्छक्य कृतास्ति । तथापि विलम्बितत्वेन बहुषु स्थलेषु यद्यशुद्धयो भवेयुश्चेत्तान् सशोध्यानुकम्पनीयोऽय सकलशास्त्रनिष्णातैर्मनीषिभि । इत्यलम् । लिखी ज्यो भीमशकरजी । भवदीयानुग्रहाकाङ्क्षी मु निवाहेडा प शोभालाल शर्म्मा ।

## APPENDIX A

*Index of Smrti authors and Works cited*

## APPENDIX B

### *Index of Purānas cited*

## APPENDIX C

### *Index of Vedic works cited*

# APPENDIX D

## *Index of Citations in the footnotes*

## APPENDIX E

### *Index of Half Verses*[1]



[1] A star indicates a prose passage

आ

इ

ख



ग

छ



ज

झ



ड

ध

न

प

फ

म

य

श

ष



स